वह सब 'कार्य' रूप अर्थप्रकृति के अन्तर्गत रहा करता है। प्रधान उपाय तो 'बीज' है हाँ किन्तु उसका सहायक जो कुछ भी उपाय है वह सब 'कार्य' रूप ही है (कार्यते फलमिति कार्यम्)। इस प्रकार नाटककार द्वारा 'बीज' रूप से निक्षिप्त वृत्तविशेष की सफलता के लिये नियोजित जो भी वृत्त-वैचित्र्य है वह सब 'कार्य' रूप ही है।

'कार्य' का यही अभिप्राय नाट्यदर्पणकार ने भी लिया है—

साध्ये बीजसहकारी कार्यम्—

प्रधाननायक-पताकानायक-प्रकरीनायकैः साध्ये प्रधानफलत्वेनाभिप्रेते बीजस्य प्रारम्भावस्थोपक्षिप्तस्य प्रधानोपायस्य सहकारी सम्पूर्णतादायी सैन्य-कोश-दुर्ग-सामाद्युपायलक्षणो द्रव्य-गुण-क्रियाप्रभृति सर्वोऽर्थश्चेतनैः कार्यते फलमिति कार्यम्। अयमत्रोपायानां निबन्धसंक्षेपः-सहायानपेक्षाणां नायकानां वृत्ते बीज-बिन्दु-कार्याणि त्रय एवोपायाः, सहायापेक्षाणान्तु पताका-प्रकरीभ्यामन्यतरया वा सह पञ्च चत्वारो वेति।'

'कार्यं स्तु मुख्यतया—

कार्यं. फलं प्रत्युपकारविशेषैः पुनर्बीजादीनां मुख्यता बाहुल्यं प्राधान्यं वा निबन्धनीयम्। तत्र बीजबिन्द्वोस्तावन्मुख्यत्वमेव सर्वव्यापित्वात्। पताका-प्रकरी-कार्याणां तु मुख्यफलं प्रत्युपयोगापेक्षया एकस्य द्वयोस्त्रयाणां वा मुख्यत्वमन्येषां चामुख्यत्वम्। तत्र पताकायां मुख्यत्वं यथा श्रीशूद्रकविरचितायां मृच्छकटिकायां पूर्वोपकारोपगृहीतस्यार्यकस्य। प्रकर्यां यथा वीरनागविरचितायां कुन्दमालायां सीतायास्तदपत्ययोश्च पालनसंयोजनाभ्यां स्वफलनिरपेक्षस्य वाल्मीके। उभयोर्यथारामप्रबन्धेषु सुग्रीवविभीषणयोर्जटायुहनूमदङ्गदादीनाञ्च। पताका-प्रकर्योरल्पत्वेऽभावे वा सर्वत्र कार्यस्य मुख्यत्वमिति।'

(नाट्यदर्पण १ म विवेक)

अर्थात् 'बीज' रूप से उपक्षिप्त नायक के उपाय किं वा इस उपाय से सम्बद्ध इतिवृत्त की सफलता-सम्पूर्णता के लिये सर्वत्र रूपक-प्रबन्धों में 'कार्य' रूप का अर्थ प्रकृति की योजना अनिवार्य है। नायक सहायतापेक्षी हो अथवा सहायतानपेक्षी हो, प्रासङ्गिक वृत्त की योजना की गयी हो या न की गयी हो, 'कार्य' की योजना आवश्यक है क्योंकि बिना सैन्य-दुर्ग-कोष आदि साधनवर्णन के कार्यारम्भ की सफलता का अभिव्यञ्जन कदापि सम्भव नहीं।

किन्तु 'दशरूपक'कार ने 'कार्य' का दूसरा ही लक्षण-निरूपण किया है—

'तस्येतिवृत्तस्य किं फलमित्याह—

कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च।

-धर्मार्थकामाः फलं तस्य शुद्धमेकैकमेकानुबन्धं द्विच्यनुबन्धं वा।'

तत्साधनं व्युत्पादयति—

स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा।

स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद् बीजम्, तच्च महाकार्यावान्तरकार्यहेतुभेदादनेकप्रकारमिति।'

(दशरूपक १म प्रकाश)

अर्थात् 'कार्य'से अभिप्राय धर्म अर्थ-कामरूप पुरुषार्थ से है जिसकी प्राप्ति के लिए नायक के कार्यारम्भ आदि का चित्रण किया जाया करता है। यह कार्य 'महाकार्य' 'अवान्तर कार्य' आदि रूपों में विभक्त रहा करता है। 'कार्य' बीज का सहकारी (साधन) नहीं अपितु बीज का साध्य है—

दशरूपककार के इस 'कार्य' लक्षण के प्रभाव में ही भावप्रकाशनकार की यह 'कार्य-परिभाषा' निकली है।

( अवस्थापञ्चक स्वरूप और प्रकार निर्देश )

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥ ७० ॥
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।

"बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥
एते कथाशरीरस्य हेतवः परिकीर्तिताः ।
साधनत्वाद्धि बीजस्य प्रथमं तदुपक्षिपेत् ॥
साध्यत्वादेव कार्यस्य सर्वान्ते तत्प्रयोजयेत् ।
अविच्छेदाय रचयेद् बिन्दुं मध्ये तयोरपि ॥
तत्र तत्र यथायोगं पताकां प्रकरीं न्यसेत् ।
एवम् अर्थप्रकृतयस्तत्प्रवृत्तिश्च दर्शिता ॥
... ... ... ...
ताताज्ञामभिनीतिमेति वाक्ये कार्यं विरोध्यते ।
'ताताज्ञामधिमौलि मौक्तिकमपि कृत्वा महापोत्रिणो
रक्षाविरविलासपत्रमकरी यद्वा धृतं मेदिनी ।
सेतुर्दक्षिणपश्चिमौ जलनिधी सीमन्तपर्यन्तितौ
कल्पान्ते च कृतं समस्तमधुनाभीतोपसर्गं जगत् ॥
अत्र धर्मार्थनिष्पत्तिः फलत्वेन प्रकल्पिता ॥"

( भावप्रकाशन षष्ठ अधिकार )

यहाँ स्पष्टतया 'बीज' को साधन और धर्मार्थकामरूप 'कार्य' को फल अथवा साध्य निर्दिष्ट किया गया है।

साहित्यदर्पणकार का 'कार्य' लक्षण 'दशरूपक' और 'भावप्रकाशन' के 'कार्य'लक्षण के आधार पर निकला है। ऐसा प्रतीत होता है कि साहित्यदर्पणकार ने यहाँ अपनी सूक्ष्मबुद्धि का साथ छोड़ दिया है क्योंकि यदि 'कार्य' भी साध्य ही हो तो 'फलागम' और 'कार्य' ( पाँचवीं अवस्था और पाँचवीं अर्थप्रकृति ) को पृथक् पृथक् गिनाने और बताने की क्या आवश्यकता।

अनुवाद—फल के उद्देश्य से जो कार्य प्रारम्भ किया जाय उसकी ये पाँच अवस्थाएँ स्वभावतः हुआ करती हैं—१ आरम्भ २. यत्न ३. प्राप्त्याशा, ४ नियताप्ति और ५. फलागम।

विमर्श—अवस्थाभिनिरूपण में भी साहित्यदर्पणकार ने दशरूपक के ही इस अवस्था-लक्षण का सहारा लिया है—

'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमाः ॥' ( दशरूपक १.१ )

यहाँ यह स्पष्ट है कि 'अवस्थापञ्चक' नाट्यशास्त्र का पारिभाषिक पद न होकर सामान्यार्थक पद हो गया है। यहाँ अवस्थापञ्चक' के रूप में किसी कार्य अथवा व्यापार की पाँच दशाओं का ही निरूपण किया गया है। किन्तु भरत मुनि के इस 'अवस्थापञ्चक' निरूपण अर्थात्—

'संसाध्ये फलयोगे तु व्यापारः कारणस्य ( यस्य ) यः ।
तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च सम्भवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ ( नाट्यशा०

( १म अवस्था ' आरम्भ )

तत्र—

**भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ७१ ॥**

यथा—रत्नावल्यां रत्नावल्यन्त पुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम् । एव नायकनायिकादीनामप्यौत्सुक्यमाकरेपु बोद्धव्यम् ।

( २य अवस्था यत्न )

**प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।**

---

के परामर्श में अभिनवभारतीकार का जो कथन है—

'अथ कविप्रयत्नेन साध्यो व्यापारपरिस्पन्दो यो वाङ्मनसगतस्तस्य या अवस्था, आनुपूर्व्येति-उद्देशक्रमेणैव प्रयोक्तृभि कविभिर्निवन्धनीयतया ज्ञातव्या ता उद्दिशति-प्रारम्भश्चेति । चकारैस्तथाशव्देन चावश्यंभाविक्रमत्वमासामुच्यते । न हि प्रेक्षापूर्वकारिणोऽवस्थान्तरासभावनायां प्रारम्भ उचितो भवति, तत्प्रारम्भश्चेदुत्तरोत्तरावस्था-प्रसर एव । पञ्चम इत्यनेन क्रमो विवक्षित इति दर्शयति । एता क्रमेण दर्शयितुमाह ( औत्सुक्यमात्रवन्धस्त्विवति )—महत प्रधानभूतस्य फलस्य युज्यमानस्य तत्तन्नायकोचितस्य यद्बीजमुपायसम्पत् तस्य यदौत्सुक्यमात्र तद्विपयस्मरणोत्कण्ठानुरूपम् , अनेनोपायेनैतत् सिद्ध्यतीति, तस्य वन्धो हृदये निरूढि प्रारम्भ, सा च नायकस्यामात्यस्य नायिकाया प्रतिनायकस्य दैवस्य वा तस्या हि तथैवानुमानाद् व्यवस्था' ।

( अभिनवभारती नाट्यशास्त्र १९. ७. ८ )

उससे यह पता चलता है कि 'अवस्थापञ्चक' का सम्बन्ध नायक से तो है किन्तु कवि अथवा नाटककार से भी है । वास्तविक जीवन के नायकादि के व्यापार का 'अवस्थापञ्चक' नाटककार की कला द्वारा नाटक के 'अवस्थापञ्चक' के रूप में परिणत हुआ करता है । नाटक का 'अवस्था-पञ्चक' नाटक के मुख्य चरितों के व्यक्तित्व के क्रमिक विकास चित्रण का विश्लेषण है । इस 'अवस्थापञ्चक' की समुचित योजना के ही लिये 'अर्थप्रकृतिपञ्चक'रूप इतिवृत्तयोजना की यथास्थान और यथासमव आवश्यकता हुआ करती है ।

अनुवाद—'आरम्भ' कार्य की वह अवस्था है जिसे मुख्य फल की सिद्धि के लिये औत्सुक्य कहा गया है ।

जैसे कि 'रत्नावली' में, नायक वत्सराज उदयन के अन्त पुर में नायिका रत्नावली के निवेश के लिये, अमात्य यौगन्धरायण का जो औत्सुक्य-वर्णन है उसमें आरम्भावस्था की ही योजना दिखायी देती है । अन्यान्य रूपक-प्रवन्धों में अन्यान्य नाटकीय चरितों जैसे कि नायक, नायिका आदि-आदि के औत्सुक्यवन्ध की योजना की गयी है किन्तु यह सव भी 'आरम्भ' दशा की ही योजना है ।

**विमर्श**—'आरम्भ' का अभिप्राय केवल मुख्यफलसिद्धि के लिये उपायविपयक औत्सुक्य ही नहीं अपितु इस औत्सुक्य के अनुरूप वाङ्मनस-व्यापार भी है जैसा कि नाट्यदर्पणकार ने स्पष्ट कहा है—

'उपायविपयमौत्सुक्यमौत्सुक्यानुगुणो व्यापारश्चारम्भावस्थेत्यर्थ ।

( नाट्यदर्पण-१ म विवेक )

अनुवाद—'प्रयत्न' वह कार्यावस्था है जिसे फलप्राप्ति के लिये सत्वर उद्योग के रूप में देखा जाया करता है ।

यथा रत्नावल्याम्—'तहवि ण अत्थि अण्णो दंसण उवाओ त्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सम्।' [ तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथासमीहितं करिष्यामि ] इत्यादिना प्रतिपादितो रत्नावल्या चित्रलेखनादिर्वत्सराजसङ्गमोपायः। यथा च—रामचरिते समुद्रबन्धनादिः।

( ३य अवस्था : प्राप्त्याशा )

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥ ७२ ॥

यथा—रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया चानिर्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्राप्त्याशा।

एवमन्यत्र।

---

जैसे कि 'रत्नावली' के, इस प्रसङ्ग अर्थात् 'उदयन से मिलने का और तो कोई उपाय नहीं केवल जैसे-तैसे उन्हें चित्र में खींचकर अपनी इच्छा पूरी करूँ' में उपनिबद्ध, वत्सराज से मिलने के लिये, रत्नावली का चित्रलेखनरूप जो व्यापार है उसमें 'प्रयत्न' दशा का ही स्वरूप परिलक्षित होता है। इसी प्रकार रामचरित-सम्बन्धी रूपक-प्रबन्धों में समुद्रबन्धन आदि व्यापार-वर्णन प्रयत्न-दशा की ही योजना के रूप में देखा जा सकता है।

विमर्श—नाट्यदर्पणकार ने 'अभिनवभारती' का अनुसरण करते हुये 'प्रयत्न' का बड़ा सुन्दर लक्षण किया है—

'प्रयत्नो व्यापृतौ त्वरा। मुख्यफलोपायव्यापारमे त्वराऽनेनोपायेन विना फलं न भवतीति निश्चयेन परमौत्सुक्यं प्रवर्तनं परमः प्रयत्नः। औत्सुक्यमात्रमारम्भः परमौत्सुक्यं तु प्रयत्न इत्यर्थः ( नाट्यदर्पण : १ म विवेक )।'

अर्थात् प्रयत्न आरम्भ की ही उत्तरावस्था है। आरम्भ यदि औत्सुक्य है तो प्रयत्न परमौत्सुक्य।

अनुवाद—'प्राप्त्याशा' वह कार्यावस्था है जिसे फलसिद्धि के साधक और प्रतिबन्धक के पारस्परिक द्वन्द्व में फलसिद्धि की आशा अथवा सम्भावना कहा गया है।

जैसे कि 'रत्नावली' के तृतीय अङ्क में रत्नावली के वासवदत्ता-वेष में अभिसाररूप सङ्गमोपाय ( उदयन-मिलन के साधक ) और वासवदत्ता की उपस्थिति के रूप में उसके सङ्गमापाय ( उदयन-मिलन के प्रतिबन्धक ) के द्वन्द्व में उदयन-मिलन रूप फल की सम्भावना अथवा आशा का जो चित्रण है वह प्राप्त्याशावस्था की ही योजना है।

*इसी भाँति अन्य रूपकप्रबन्धों में अन्यविध प्राप्त्याशा-योजना देखी जा सकती है।*

विमर्श—नाट्यदर्पणकार के अनुसार 'प्राप्त्याशा' का यह स्वरूप है :—

'फलसंभावना किञ्चित् प्राप्त्याशा हेतुमात्रतः। मात्रग्रहणेन फलान्तरयोगः प्रतिबन्धनिश्चयश्च व्यवच्छिद्यते। फलान्तरासंबन्धादनिश्चितबाधकाभावादुपायादीषत् प्रधानफलस्य या सम्भावना न तु निश्चयः सा मातेः प्रधानफलकामस्याशा प्राप्त्याशा।

( नाट्यदर्पण १ म विवेक )

तात्पर्य यह है कि रूपक प्रबन्धों में जो प्राप्त्याशा-योजना है वह नायकचरितों के अन्तर्द्वन्द्व और बहिर्द्वन्द्व की ही अभिव्यञ्जना है।

(४थ अवस्था : नियताप्ति)

**अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।**

अपायाभावान्निर्धारितैकान्तफलप्राप्तिः। यथा रत्नावल्याम्—'राजा—देवी-प्रसादन त्यक्त्वा नान्यमत्रोपायं पश्यामि।' इति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता।

(५म अवस्था फलागम)

**साऽवस्था फलयोगः स्याद्यः समग्रफलोदयः ॥ ७३ ॥**

यथा—रत्नावल्या रत्नावलीलाभश्चक्रवर्तित्वलक्षणफलान्तरलाभसहितः। एवमन्यत्र।

---

अनुवाद—'नियताप्ति' कार्य की वह अवस्था है जिसे 'अपायाभाव' अर्थात् विघ्नबाधा की निवृत्ति में फल-प्राप्ति की सभावना का निश्चय कहा गया है।

'अपायाभावात् निश्चिता प्राप्ति' का अभिप्राय विघ्न के निराकरण में निर्धारित फलप्राप्ति का अभिप्राय है। जैसे कि 'रत्नावली' के इस प्रसङ्ग अर्थात् 'वासवदत्ता को प्रसन्न करने के अतिरिक्त उदयन से मिलने का और कोई उपाय नहीं' में, वासवदत्ता-प्रसादनरूप उपाय के द्वारा, उदयन-मिलन के विघ्नों की निवृत्ति में, उदयन-मिलन की सभावना का जो निश्चय है उसमें 'नियताप्ति' की ही झलक दिखायी दिया करती है।

विमर्श—नाट्यदर्पणकार ने 'नियताप्ति' का यह लक्षण किया है—

'नियताप्तिरुपायानां साकल्यात् कार्यनिर्णय ।

प्रधानफलहेतूना प्रतिवन्धकाभावेन सकलसहकारिसम्पत्त्या कार्यस्य प्रधानफलस्य निर्णयो भविष्यत्येवेति निश्चयो नियता फलाव्यभिचारिण्याप्तिर्नियताप्तिः।'

(नाट्यदर्पण १म विवेक)

अनुवाद—'फलागम' वह कार्यावस्था है जिसे समग्र फललाभ कहा गया है।

जैसे कि 'रत्नावली' में ही, नायक वत्सराज उदयन के रत्नावली-लाभ और साथ ही साथ चक्रवर्तित्व-लाभ का जो वर्णन है वह 'फलागम' की अवस्था की ही योजना है।

इसी प्रकार अन्य रूपक-प्रबन्धों की भी फलागमावस्था पहचानी जा सकती है।

विमर्श—आचार्य रामचन्द्र और गुणचन्द्र ने 'फलागम' का यह विमर्श किया है जो यहाँ ध्यान देने योग्य है—

'साक्षादिष्टार्थसम्भूतिर्नायकस्य फलागम ।

साक्षात् समनन्तर न तु दानादिभ्य स्वर्गादिफलमिव जन्मान्तरभाविनी इष्टस्याभि-प्रेतस्य अर्थस्य प्रयोजनस्य सम्यक् पूर्णत्वेन भूतिरुत्पत्ति । फलस्यागम आगमारम्भो न पुनरागतत्वम्। इह फलस्योत्पत्त्यावेश पञ्चम्यवस्था। उत्पतनस्य तु नायकेन य. संभोगस्तत् प्रबन्धस्य मुख्य साध्यम्। अतएव फले साध्ये नायकस्य पञ्चावस्था सङ्ग-च्छन्ते। नायकस्येत्यनेन चावस्थान्तराणि सचिव-नायिका-विपक्ष-दैवादिव्यापारैरपि निबध्यन्ते इत्युक्त भवति। तानि तु तथा निबद्धान्यपि फलतो नायक एव पर्यवस्यन्ति। फलागम पुनर्नायकस्यैव निबद्ध्यते।' (नाट्यदर्पण १म विवेक)

अर्थात् 'फलागम' का अभिप्राय नायक का समग्र फललाभ नहीं अपि तु उसके समग्र फल के लाभ का आरम्भ है। फल की प्राप्ति फलागम नहीं अपि तु फल की उत्पत्ति फलागम है। अन्यथा इसे कार्यावस्था कैसे कहा जा सकता है।

( 'सन्धि' स्वरूप-निरूपण )

यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥ ७४ ॥

तल्लक्षणमाह—

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः ।

तद्भेदानाह—

( सन्धिपञ्चक )

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ ७५ ॥
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।

---

अनुवाद—'अर्थप्रकृतिपञ्चक'रूप वृत्तभेद के साथ अवस्थापञ्चक की क्रमिक सम्बद्ध योजना के कारण नाटकीय इतिवृत्त के जो पाँच भाग हुआ करते हैं उन्हें ही पाँच संधियाँ कहा करते हैं।

यहाँ 'संधि' का अभिप्राय एक प्रधान इतिवृत्त के साथ परस्पर सम्बद्ध अन्य अवान्तर इतिवृत्त-खण्डों के सम्बन्ध का अभिप्राय है।

तात्पर्य यह है नाटक के इतिवृत्त-खण्डों का अपने-अपने उद्देश्य-विशेषों के साथ सम्बन्ध तो 'सन्धि' है ही, साथ ही साथ इन परस्पर संबद्ध इतिवृत्त-खण्डों और उनके उद्देश्यों का प्रधान नाटकीय इतिवृत्त और उसके मुख्य उद्देश्यविशेष के साथ जो सम्बन्ध है वह भी 'संधि' ही है।

विमर्श—साहित्यदर्पणकार ने 'अभिनवभारती' के सन्धि-विमर्श के आधार पर 'सन्धि' का यह स्वरूप-विवेक किया है—

'सन्धयो मुख्यवृत्तांशाः पञ्चावस्थानुगाः क्रमात्। मुख्यस्य स्वतन्त्रस्य महावाक्यार्थस्यांशा भागाः परस्पर स्वरूपेण चाङ्गेन सन्धीयन्त इति सन्धयः अवस्थाभिः प्रारम्भादिभिरनुगता अनुयाता अवस्था समाप्तौ समाप्यन्त इत्यर्थः। ( नाट्यदर्पण : १ म विवेक )

अर्थात् यदि रूपक-प्रबन्ध को एक 'महावाक्य' और रूपक-प्रबन्धार्थ को 'महावाक्यार्थ' माना जाय तो सन्धिपञ्चक को इसका अंशपञ्चक अथवा भागपञ्चक मानना पड़ेगा। महावाक्यरूप रूपकप्रबन्ध के ये पाँच अंश अथवा भाग अपने अपने अवान्तर अंशों अथवा भागों में तो संश्लिष्ट रहा ही करते हैं परस्पर भी संश्लिष्ट अथवा सुसंबद्ध ही उपनिबद्ध किये जाया करते हैं। अपने अपने अंशों में सुसंश्लिष्ट किंवा परस्पर संबद्ध यह पंचविध रूपकार्थराशि ही सन्धिपञ्चक है।

अनुवाद—इस 'सन्धि' के ये पाँच भेद हैं—(१) मुख (२) प्रतिमुख (३) गर्भ (४) विमर्श और (५) उपसंहृति (अथवा निर्वहण)।

विमर्श—नाट्याचार्य भरतमुनि ने पञ्चविध सन्धि का यह निर्देश किया है—

'मुखं प्रतिमुखं चैव गर्भो विमर्श एव च।
तथा निर्वहणं चेति नाटके पञ्च सन्धयः॥

जिसे अभिनवभारतीकार ने इस प्रकार समझाया है—

'मुखं प्रतिमुखं चेति। समुचयपदैः पञ्चानां सर्वासामवस्थानामस्य न्यायसिद्धम्। नियम-

( १ म सन्धि-मुखसन्धि )

यथोद्देशं लक्षणमाह—

**यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ ७६ ॥**
**प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ।**

यथा—रत्नावल्या प्रथमेऽङ्के ।

---

वाचिभि क्रमनियम । नाटक इत्यभिनेयरूपके इत्यर्थ. । महावाक्यार्थरूपस्य रूपकार्थस्य पञ्चाशा अवस्थाभेदेन कल्प्यन्ते । ' तेनार्थावयवा सन्धीयमाना परस्परमङ्गैश्च सन्धय इति समाख्या निरुक्ता ।' ( अभिनवभरती नाट्यशास्त्र १९ ३७ )

अर्थात् अपने-अपने अङ्गों में सम्बद्ध और परस्पर सम्बद्ध जो रूपकार्थ के पाच अश अथवा अवयव हैं वे ही पाच सन्धिया हैं ।

अनुवाद—क्रमश 'सन्धिपञ्चक' का निरूपण किया जा रहा है । इस 'सन्धिपञ्चक' में जो प्रथम सन्धि है उसे 'मुख' कहा करते हैं । 'मुखसन्धि' का अभिप्राय रूपक की अर्थराशि का वह अश है जिसके साथ नायक की प्रारम्भावस्था सम्बद्ध रहा करती है और जिसमें 'बीज' रूप अर्थप्रकृति की योजना हुआ करती है । यह 'मुखसन्धि' रूप अर्थराशि ऐसी हुआ करती है जिसमें भिन्न-भिन्न रसभावों की अभिव्यञ्जना भरी रहा करती है ।

जैसे कि 'रत्नावली' नाटिका के प्रथम अङ्क की जो अर्थराशि है वह 'मुखसन्धि'रूप ही अर्थराशि है ।

**विमर्श**—नाट्याचार्य भरतमुनि के अनुसार 'मुखसन्धि' का यह लक्षण है—

'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुख परिकीर्तितम् ॥'

जिसे 'अभिनवभारती'कार ने इस प्रकार समझाया है—

'प्रागारम्भभावित्वान्मुखमिव मुखम्, यावत् क्रियावत्यर्थभागराशौ बीजस्य मुखोपायस्य सम्यगुत्पत्ति' शरीरेण प्रारम्भात्मना अनुगता भवति, नानाभूतोऽर्थवशात् प्रसङ्गायातो रससभवो य स्यात् । एतदुक्त भवति-प्रारम्भोपयोगी यावानर्थराशि प्रसक्तानुप्रसक्त्या विचित्रास्वाद आपतित तावान् मुखसन्धि, तदभिधायी च रूपकैकदेश । यथा रत्नावल्या प्रथमोऽङ्क । तथा हि, अमात्यस्य वीरो, वत्सराजस्य श्रृङ्गाराङ्कुतौ, तत श्रृङ्गार इति इयानय सागरिकाया राजदर्शनेऽमात्यप्रारम्भविषयीकृतेऽर्थराशिरुपयोगीति मुखसन्धि ।'

( अभिनवभारती - नाट्यशास्त्र - १९ ३९ )

अर्थात् 'मुख'सन्धि वह नाटकीय अर्थराशि है जिसके दर्शन में नाटक के मुख का दर्शन सम्पन्न हुआ करता है । नाटक के मुख होने के लिये, नाटक की यह आरम्भिक अर्थराशि रसभाववैचित्र्य से भरी हुआ करती है । 'मुख' इस प्रारम्भोपयोगी अर्थराशि को तो कहते ही हैं, साथ ही साथ इसके अभिधायक रूपक-प्रबन्ध के एकदेश को भी 'मुख' ही कहते हैं । इस दृष्टि से 'रत्नावली' के प्रथम अंक में 'मुख'सन्धि का दर्शन और 'रत्नावली' के प्रथम अङ्क का मुख-सन्धि के रूप में दर्शन—दोनों एक ही बात है ।

( २ य सन्धि : प्रतिमुख )

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ॥ ७७ ॥
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ।

यथा—रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसंगता-विदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्योद्देशरूप उद्भेदः ।

---

अनुवाद—'प्रतिमुख' वह सन्धि है जिसमें मुखसन्धि-निहित बीज का ऐसा उद्भेद हुआ करता है जो लक्ष्य और अलक्ष्य-दोनों रूप का रहा करता है।

जैसे कि 'रत्नावली के द्वितीय अङ्क की जो अर्थराशि है वह 'प्रतिमुखसन्धि'रूप अर्थराशि है क्योंकि इसमें नायक वत्सराज और नायिका रत्नावली के उस प्रेमबीज का उद्भेद दिखायी पड़ता है जो कि उनके परस्पर मिलन के हेतुरूप में प्रथम अङ्क में ही निक्षिप्त हो चुका है। रत्नावली के प्रथमाङ्क में उपक्षिप्त प्रेमबीज का यह उद्भेद इसलिये किञ्चिन्मात्र लक्ष्य है क्योंकि सुसंगता और विदूषक इससे पूर्णतया परिचित बताये गये हैं। यह इसलिये किञ्चिन्मात्र अलक्ष्य सी है क्योंकि वासवदत्ता को इसकी जो कुछ भी जानकारी है वह सागरिका द्वारा चित्रित वत्सराज के चित्र के आधार पर अनुमान द्वारा ही है प्रत्यक्षतः नहीं।

विमर्श—यहां नाट्यदर्पणकार का यह 'प्रतिमुख'-विमर्श जिस पर 'अभिनवभारती' की छाप है ध्यान देने योग्य है—

'प्रतिमुखं किंचिल्लक्ष्यबीजोद्घाटसमन्वितः।

प्रधानवृत्तांस इह उत्तरेषु च स्पर्धते। किंचिल्लक्ष्यस्य मुखसन्धौ गम्भीरत्वेन न्यस्तत्वाद्दीपस्य प्रकाशस्य बीजस्य प्रधानोपायस्योद्घाटेन प्रकटप्रकाशनेन सम्यगनुगता प्रयत्नावस्थापरिच्छिन्ना या प्रधानवृत्तांस स मुखस्याभिमुख्येन वर्तत इति प्रतिमुखम्। 'दीपाय न्यस्मारसि' इत्यादिना इत्यात्मेन सागरिकावेष्टितकर्म बीजं मुखसन्धौ न्यस्तं वसन्तोत्सवकामदेवपूजादिना तिरोहितत्वमुपलक्ष्यम्। तच्च च सुसङ्गतारचित-वत्सराज-सागरिका समागमेन द्वितीयाङ्के उद्घाट इति।' ( नाट्यदर्पण : १ म विवेक )

यहां यह स्पष्ट है कि 'रत्नावली' के प्रथम अङ्क में उपक्षिप्त प्रेमबीज के द्वितीय अङ्क में उद्भेद की लक्ष्यता और अलक्ष्यता का सम्बन्ध सामाजिकों के साथ है न कि पात्रों के साथ।

किन्तु विश्वनाथ कविराज ने दशरूपककार की इस 'प्रतिमुख'-मीमांसा अर्थात्—

'लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत्।

... ... तस्य बीजस्य किंचिल्लक्ष्यस्य किंचिदलक्ष्य इवोद्भेदः प्रकाशनं तत्प्रति मुखम्। यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया च चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसन्धिरिति।

( दशरूपक : १ म प्रकाश )

का अनुसरण किया है और बीजोद्भेद की दृश्यादृश्य-रूपता को 'रत्नावली' के पात्रों की दृष्टि से देखा है न कि सामाजिक की दृष्टि से।

(३ य सन्धि गर्भसन्धि)

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ॥ ७८ ॥**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ।**

फलस्य गर्भीकरणाद्गर्भः । यथा रत्नावल्या द्वितीयेऽङ्के—'सुसंगता—सहि, अदक्खिणा दाणिं सि तुमं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुञ्चसि' [सखि ! अदक्षिणेदानीमसि त्वं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि] इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के—'तद्वार्तान्वेषणाय गतः कथं चिरयति वसन्तकः' इत्यन्वेषणम् । विदूषकः—ही ही भो, कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोसो जादिसो मम सआसादो पियवअणं सुणिअ भविस्सदि' [ही ही भोः कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति] इत्यादावुद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः । सागरिकायाः सङ्केतस्थानगमनेऽन्वेषणम् । पुनर्लतापाशकरणे उद्भेदः ।

---

अनुवाद—'गर्भ' वह सन्धि है जिसे 'मुख' और 'प्रतिमुख' सन्धि में क्रमश किंचिन्मात्र उद्भिन्न प्रधानोपायरूप वीज का ऐसा समुद्भेदन कहा जाया करता है जिसमें वीज के ह्रास और विकास की चिन्ता साथ-साथ चला करती है ।

इस सन्धि को 'गर्भ' इसलिये कहा करते हैं क्योंकि इसमें नाटक का प्रधान फल गर्भित (अन्तर्निविष्ट) प्रतीत हुआ करता है । उदाहरण के लिये, 'रत्नावली' के द्वितीय अङ्क का जो यह प्रसङ्ग अर्थात्—

'सुसङ्गता-सखी ! तेरे प्रियतम ने अपने हाथ से तुझे पकड़ रखा है लेकिन तू है जो कोप छोड़ना नहीं जानती ।' आदि है, उसमें तो मुखसन्धि-निक्षिप्त अनुराग-वीज का समुद्भेद दिखायी पड़ रहा है । इसके अनन्तर वासवदत्ता के पुन प्रवेश में इस वीज का ह्रास परिलक्षित होता है । तत्पश्चात् तृतीय अङ्क के इस सन्दर्भ अर्थात् 'सागरिका का समाचार जानने, वसन्तक, न जाने, कब निकला लेकिन अभी तक न आया ।' आदि में, इसका अनुसन्धान प्रतीत होता है और विदूषक का जो यह कथन अर्थात्—'कौशाम्बी का राज्य मिलने पर भी मेरे प्रियवयस्य को उतनी खुशी न होगी जितनी मेरे मुँह से इस आनन्द की बात सुन लेने पर' आदि है, उसमें इसी का विकास पता चल रहा है । इसी प्रकार वासवदत्ता के पहचानने में इस वीज के ह्रास और सागरिका के प्रेममिलन-स्थान पर पहुँचने में इसके अनुसन्धान और लतापाश से सागरिका के आत्मघात-चिन्तन में समुद्भेद की जो प्रक्रिया दिखायी देती है वह सब 'गर्भसन्धि' रूप ही अर्थराशि है ।

विमर्श—आचार्य रामचन्द्र के अनुसार 'गर्भ' सन्धिका यह अभिप्राय है—

'वीजस्यौन्मुख्यवान् गर्भो लाभालाभगवेषणैः ।

उत्पत्त्युद्घाटनदशाद्वयाविष्टस्य वीजस्यौन्मुख्यं फलजननाभिमुख्यं तद्वान् । प्राप्त्याशया तृतीयावस्थया परिच्छिन्नो लाभालाभगवेषणैः पुनः पुनर्भवद्भिर्युक्तः प्रधानवृत्तांशो गर्भसन्धिः । ''' अत्र पुनः पुनर्लाभालाभगवेषणैर्वीजस्यौन्मुख्यं दर्शितम् । अतएव फल

( ५ वीं सन्धि : विमर्श-सन्धि )

अथ विमर्श—

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ॥ ७९ ॥
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।

यथा शाकुन्तले चतुर्थाङ्कादौ—'अनसूया—पिअंवदे, जइ वि गन्धव्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही सउन्दला अणुरूवभत्तुभाइणी संवुत्तेति णिव्वुदं मे हिअअम्, तह वि एत्तिअं चिन्तणिज्जम्' [ प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला, तथापि अनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ] इत्यत आरभ्य सप्तमाङ्कोपक्षिप्ताच्छकुन्तलाप्रत्यभिज्ञानात्प्रागर्थसञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः ।

---

प्राप्तिसम्भावनात्मको गर्भसन्धिरुच्यते । इह गर्भसन्ध्यपेक्षया प्रधानफलसंभावनात्मकत्वम् " 'अवमर्शसन्धौ तु प्राप्त्यया प्रधानफलनिश्चयरूपत्वादिति विशेषः ॥
( नाट्यदर्पण १ म विवेक )

अर्थात् 'गर्भसन्धि' रूपकरचना की वह अर्थराशि है जिसे 'मुख' और 'प्रतिमुख' सन्धियों का स्वाभाविक विकास कह सकते हैं। बीज की उत्पत्ति के बाद उद्घाटन और उद्घाटन के बाद उसके उद्भेद स्वभावतः हुआ करता है। गर्भसन्धि में फलप्राप्ति की सम्भावना अभिव्यक्त होती है फलप्राप्ति का निश्चय नहीं। 'बीज' के उद्भाव और ह्रास और अन्वेषण अथवा विघ्न-बाधा और उसके निराकरण में जो द्वन्द्व है उसका प्रदर्शन रूपक की एक अनिवार्य आवश्यकता है।

अनुवाद—'विमर्श (अथवा अवमर्श) वह सन्धि है जिसमें गर्भसन्धि से उद्भिन्न प्रधानोपाय रूप बीज और भी अधिक, उद्भिन्न प्रतीत हुआ करता है और साथ ही साथ बाह्य परिस्थिति (जैसे कि शापादि) के कारण आनेवाली विघ्न-बाधाओं से भी व्यवहित दिखायी दिया करता है।

उदाहरणके लिए, 'अभिज्ञानशाकुन्तल' के चतुर्थ अङ्क के आरम्भक इस संदर्भ अर्थात्—
'अनसूया—प्रियंवदे ! यद्यपि हमारी सखी शकुन्तला का गान्धर्वविधि से विवाह-मङ्गल सम्पन्न हो चुका और वह अपने योग्य पति को भी पा चुकी, किन्तु हम लोगों को इस बात की चिन्ता है'

आदि, से लेकर सप्तम अङ्क में उपनिबद्ध शकुन्तला-प्रत्यभिज्ञान (शकुन्तला की पहचान) रूप वृत्तान्त के पहले जो भी इतिवृत्त भाग है वह 'विमर्श' सन्धिरूप ही अर्थराशि है।

इसमें पहले की अपेक्षा अधिक फलोन्मुख बीज अर्थात् दुष्यन्तगत शकुन्तला-विषयक प्रेम-प्रस्ताव के विकास में विघ्न घटना की योजना की गयी है वह 'शकुन्तलाविस्मरण' (दुष्यन्त द्वारा शकुन्तला की विस्मृति) की घटना है जो कि इस समस्त अर्थराशि को 'विमर्श' रूप बना रही है।

विमर्श—विमर्श [illegible] अवमर्श भी कहा करते हैं। अभिनव [illegible] किया है—

'गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
[illegible] स विमर्श इति स्मृतः ॥

गर्भनिर्भिन्नबीजार्थ इति । क्वचिद् विमर्श इति पठन्ति अन्ये अवमर्श इति । तत्र

( ५ म सन्धि • निर्वहणसन्धि )

अथ निर्वहणम्—

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ८० ॥
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ।

यथा—वेण्याम्, 'कञ्चुकी—( उपसृत्य, सहर्षम् ) महाराज ! वर्धसे । अय खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः' इत्यादिना द्रौपदीकेशसयमनादिमुखसन्ध्यादिबीजाना निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम् ।

यथा वा—शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः । एषामङ्गान्याह—

---

सन्देहात्मको विमर्श । ननु पूर्व सभावनाप्रत्यय तत• सशय इति नेदमुचितम्, संशयनिर्णयान्तरालवर्तिनं हि तर्कं तार्किका प्राहु । किं च विमर्शसन्धिर्नियतफलप्राप्त्यवस्थया व्याप्त, तच्च नियतत्व सदेहश्चेति किमेतत् । 'अत्राहु –तर्कानन्तरमपि हेत्वन्तरवशाद् बाधच्छलरूपतापराकरणे सशयो भवेत्, किं न भवति ! इहापि च निमित्तबलात् कुतश्चित् संभावितमपि फल यदा बलवता प्रत्यूह्यते कारणानि च बलवन्ति भवन्ति तदा जनकविघातकयोस्तुल्यबलत्वात् कथ न सदेह । तुल्यबलविरोधकविधीयमानवैधुर्यव्याधूननसन्धीयमानस्फारफलावलोकनाया च पुरुषकार सुतरामुद्धुरकन्धरीभवतीति तर्कानन्तरमत्र सशय• ततो निर्णय इत्येतदेवोचिततरम् ।' ( अभिनवभारती १९, ४२ )

अर्थात् 'प्राप्त्याशा' के बाद 'नियताप्ति' की अवस्था का जो क्रम है वही 'गर्भ' के बाद 'विमर्श' का क्रम है। फलप्राप्ति की सभावना होने पर भी सदेह का होना इसलिये स्वाभाविक है क्योंकि विघ्न-बाधाओं की मुठभेड समाप्त नहीं हुई है। फलप्राप्ति की नियत सभावना और विघ्नबाधा के कारण इसकी संदिग्धता के द्वन्द्व में जो नाटकीय चरित का विकास हुआ करता है उसका एक अपना ही सौन्दर्य और महत्त्व है। 'विमर्श' सन्धि में नाटक के प्रधान चरित का पौरुष और भी अधिक उद्दीप्त रूप से प्रकाशित हुआ करता है।

अनुवाद—निर्वहण सन्धि –'निर्वहण सन्धि' रूपक प्रबन्ध की वह अर्थराशि है जिसमें उन-उन सन्धिओं में यत्र-तत्र उपन्यस्त बीजादि रूप इतिवृत्ताश प्रधान फल के निष्पादक बनते दिखायी दिया करते हैं।

उदाहरण के लिये 'वेणीसहार' के इस प्रसङ्ग अर्थात्—

'कञ्चुकी—( पास पहुँच कर, सहर्ष ) महाराज ! जय हो।

दुर्योधन के रक्त से रजित और इसीलिये पहचान में •न आने वाले ये भीमसेन ही हैं' आदि में इस नाटक के प्रधान फल के निष्पादन का जो उपन्यास है वह निर्वहण सन्धि रूप ही रूपकार्थ है। वस्तुत यही वह रूपकार्थ है जिसकी निष्पत्ति के लिये उन-उन सधियों में यथास्थान विन्यस्त द्रौपदीकेशसयमनादिरूप बीजादिभूत इतिवृत्ताश उन्मुख किं वा उत्सुक होते रहे हैं।

अथवा 'अभिज्ञानशाकुन्तल' के सप्तमाङ्क में शकुन्तला की पहचान की घटना के बाद की जो वृत्त-योजना है उसे भी 'निर्वहण' के निदर्शन रूप में ले सकते हैं।

( सन्ध्यङ्ग-निरूपण : 'मुख' सन्धि के १२ अङ्ग )

उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ ८१ ॥
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेद करणं भेद एतान्यङ्गानि वै मुखे ॥ ८२ ॥

( १ म अङ्ग—उपक्षेप )

यथोद्देशं लक्षणमाह—

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।

---

विमर्श—नाट्यदर्पणकार के अनुसार 'निर्वहण' का यह स्वरूप है—

'सबीजबिन्द्ववस्था नानाभावा मुखादयः ।
एकार्थयोगिनो यस्मिन्नसौ निर्वहणं मुखम् ॥

बीजस्य बिन्दुः विकारः ... सह बीजबिन्दुभिरवस्थाभिः आरम्भादिभिर्वर्तन्ते । नाना विविधा भावाः स्थायिव्यभिचारि-सात्त्विका अथवा भावयन्ति फलं साधयन्ति भावा उपाया बिन्दु-पताका-प्रकरी-कार्याणि च । सुखफले च फले रति-हासोत्साह-विस्मय-स्थायिभावचतुष्टयं धृति-गर्वौत्सुक्य-मत्यादि-व्यभिचारिचतुष्टयं च मुखादीनाम् । दुःखदायी तु फले क्रोध-शोक-भय-जुगुप्सा-स्थायिभावचतुष्टयमौग्र्यादि-व्यभिचारिचतुष्टयञ्च हास्यम् । मुखादयो मुख-प्रतिमुख-गर्भ-विमर्शाः । एतेन मुखसाध्येन भावक-प्रतिभावक-नायिकानायकादि-व्यापारे सम्यगर्थित्वेन मुखान्ते संवदयन्ते यस्मिन् प्रधानवृत्तांशे स फलागमावस्थया परिच्छिन्नो निर्वहणसन्धिः । मुखमिति प्रारम्भस्य निर्वाहणभावित्वात् सर्वरूपकेष्वस्यावश्यम्भावमाह । ( नाट्यदर्पण : १ म विवेक )

अर्थात् रूपक प्रबन्ध का जहाँ कहीं आरम्भ है वहीं अन्त भी है । रूपक के आरम्भ के उपयुक्त जो भी इतिवृत्त-चरित अथवा रसभावादि-रूप अर्थराशि है वही अन्त में उपसंहृत की जाया करती है और एकमात्र आनन्द में परिणत हुआ करती है ।

अनुवाद—अब इन सन्धियों के अङ्गों का निरूपण किया जा रहा है । सर्वप्रथम 'मुख' सन्धि के ये १२ अङ्ग हैं—( १ ) उपक्षेप ( २ ) परिकर ( ३ ) परिन्यास (४) विलोभन ( ५ ) युक्ति, ( ६ ) प्राप्ति ( ७ ) समाधान ( ८ ) विधान ( ९ ) परिभावना ( १० ) उद्भेद, ( ११ ) करण और ( १२ ) भेद ।

विमर्श—नाट्यशास्त्र में भरत मुनि ने सन्ध्यङ्गों का बड़ा सुन्दर अभिप्राय बताया है—

'अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् ॥
उदात्तमपि यत् काव्यं स्यादङ्गैः परिवर्जितम् ।
हीनत्वाद्धि प्रयोगस्य न सतां रञ्जयेन्मनः ॥
काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम् ।
दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ॥ ( नाट्यशास्त्र १९.५१–५५ )

अनुवाद—मुखसन्धि के अङ्गों का क्रमशः यह स्वरूप है :—

( १ ) 'उपक्षेप' वह है जिसे काव्यार्थ की समुत्पत्ति कहा करते हैं । 'काव्यार्थ' का अभिप्राय रूपक अथवा अन्य काव्यों के प्रस्तुत विषयरूप इतिवृत्त का अभिप्राय है । जैसे कि 'वेणीसंहार' के इस प्रसङ्ग अर्थात्—

काव्यार्थ इतिवृत्तलक्षणप्रस्तुतताभिधेय । यथा वेण्याम्–'भीमः—

लाक्षागृहानलविषान्नसभाप्रवेशैः

प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।

आकृष्य पाण्डववधूपरिधानकेशान्

स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

( २ य अङ्ग-परिकर )

**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ॥ ८३ ॥**

यथा तत्रैव—

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-

र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।

जरासंधस्योरःस्थलमिव विरूढं पुनरपि

क्रुधा भीमः सन्धिं विघटयति यूयं घटयत ॥

---

'भीम—ओह ! लाक्षागृह में आग लगा कर, विषमय अन्न खिला कर, द्यूत-सभा में बुला कर, धन-सम्पत्ति छीन कर, प्राण लेने के प्रयत्न कर और द्रौपदी के केश और वस्त्र खोल-खींच कर, मेरे जीते-जागते, क्या कौरव राजगण स्वस्थ बैठे आनन्द मनाया करें ?'

आदि में मुखसन्धि के 'उपक्षेप' रूप अङ्ग की ही योजना है क्योंकि यहाँ 'वेणीसंहार' रूप काव्यार्थ की उत्पत्ति स्पष्ट दिखायी दे रही है ।

**विमर्श**—'उपक्षेप' का वास्तविक अभिप्राय इतिवृत्त-रूप काव्यार्थ की ही समुत्पत्ति नहीं अपितु रूपक बन्ध के मुख्य रसभावरूप अर्थ की भी समुत्पत्ति है । जैसे कि साहित्यदर्पणकार ने 'वेणी-संहार' नाटक के जिस प्रसङ्ग का उल्लेख किया है वह इसीलिए 'उपक्षेप' नहीं कि उसमें वेणीसंहार के इतिवृत्त का बीजावाप हुआ है अपि तु इसलिए है कि उसमें वेणीसंहार के मुख्यरस का बीज बोया गया प्रतीत हो रहा है और साथ ही साथ नायक-चरित का युद्धोत्साह-रूप वैशिष्ट्य भी परिलक्षित हो रहा है ।

'उपक्षेप' अत्यन्त आवश्यक सन्ध्यङ्ग है बिना इसके नाटक की अर्थराशि का वृक्ष कदापि उत्पन्न नहीं हो सकता ।

अनुवाद—'परिकर' का अभिप्राय उत्पन्न काव्यार्थ ( अथवा नाट्यार्थ ) का बाहुल्य अथवा विकासोन्मुख होना है । जैसे कि 'वेणीसंहार' के इस प्रसङ्ग अर्थात्—

'भीम—बचपन से ही कौरवों के साथ मेरा वैरभाव बढ़ता आया है । इसके लिए न मुझे युधिष्ठिर को दोष देना है और न अर्जुन को और न तुम्हीं दोनों ( नकुल और सह-देव ) को । मैं तो जरासंध के वक्षस्थल की भाँति पहले टूटी और फिर जुड़ी, कौरवों और पाण्डवों की इस सन्धि को तोड़ने की प्रतिज्ञा कर रहा हूँ । अब तुम लोगों की हिम्मत हो तो इसे जोड़कर देख लो ।'

में, मुखसन्धि के जिस 'अङ्ग' की योजना है वह 'परिकर' ही है क्योंकि यहाँ 'वेणीसंहार-रूप' काव्यार्थाङ्कुर पहले की अपेक्षा अधिक विकासोन्मुख दिखायी दे रहा है ।

**विमर्श**—'परिकर' का अभिप्राय 'परिकरण अथवा उपक्षिप्त अर्थ के स्वल्प विस्तार का अभि-प्राय है । 'वेणीसंहार' की उपर्युक्त उक्ति में भीम का युद्धोत्साह किंवा क्रोधावेश और भी अधिक स्पष्ट रूप से प्रतीत होने लगता है ।

( ३ य अङ्ग—परिन्यास )

तन्निष्पत्तिः परिन्यासः—

यथा तत्रैव—

चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥

अत्रोपक्षेपो नाम वेणीसंहारस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम्। परिकरस्तस्यैव बहुलीकरणम्। परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनम्, इत्येषां भेदः। एतानि चाङ्गानि उक्तेनैव पौर्वापर्येण भवन्ति, अङ्गान्तराणि त्वन्यथापि।

( ४र्थ अङ्ग—विलोभन )

—गुणाख्यानं विलोभनम्।

यथा तत्रैव, 'द्रौपदी—णाध, किं दुक्करं तुए परिकुविदेण' [ नाथ ! किं दुष्करं त्वया कुपितेन ] यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने—'सेयम्, तारुण्यस्य विलास'— इत्यादि। यत्तु शाकुन्तलादिषु 'ग्रीवाभङ्गाभिरामम्—' इत्यादि मृगादिगुणवर्णनं तद्बीजार्थसम्बन्धाभावान्न संध्यङ्गम्। एवमङ्गान्तराणामप्यूह्यम्।

---

अनुवाद—'परिन्यास' कहते हैं पूर्वोपक्षिप्त किंवा स्वल्प विस्तृत काव्यार्थ के विशेष निश्चय को। जैसे कि 'वेणीसंहार' के ही इस प्रसङ्ग अर्थात्—

'भीम—द्रौपदी! चिन्ता न कर इन प्रचण्ड भुजदण्डों में घूमती अपनी गदा के प्रहार से दुर्योधन की जाँघें तोड़ दूँगा और उसके गाढ़े लाल-लाल रक्त से अपने हाथ रँगे किए तेरी वेणी सँवारूँगा।

में 'परिन्यास' की ही रूपरेखा झलक रही है।

यहाँ उपक्षेप-परिकर और परिन्यास के क्रम का अभिप्राय यह है—'उपक्षेप' तो इतिवृत्तरूप काव्य अथवा नाट्य के अर्थ का संक्षेप में उपन्यास-मात्र है जिसे 'परिकर' कहते हैं वह इसी संक्षेपतः उपस्थित काव्यार्थ का किञ्चिन्मात्र विस्तार है और 'परिन्यास' इसके बाद की अवस्था है जिसमें किञ्चिन्मात्र विस्तृत काव्यार्थ का विशेष निश्चय दिखाई दिया करता है तथा यह काव्यार्थ हृदय में स्थान पाने लगता है। ये तीन अङ्ग तो ऐसे हैं जिनकी योजना, जिस क्रम से इनका निर्देश है उसी क्रम से की जाया करती है किन्तु अन्य जो ९ अङ्ग हैं उनकी योजना क्रम अथवा व्युत्क्रम दोनों प्रकार से हो सकती है।

अनुवाद— 'विलोभन' का अभिप्राय गुणकथन अथवा गुणवर्णन का अभिप्राय है। जैसे कि 'वेणीसंहार' के ही इस प्रसङ्ग अर्थात्—

'द्रौपदी—नाथ ! आप जब क्रुद्ध हो जायँ तब क्या नहीं कर सकते !'

आदि में अथवा मेरी अपनी कृति 'चन्द्रकला' के इस चन्द्रकला-वर्णन-प्रसङ्ग अर्थात् 'यही चन्द्रकला है तरुणता की विलास मूर्ति' आदि में जो गुणवर्णन है वह 'विलोभन' रूप ही है। यहाँ यह ध्यान रखना चाहिए कि 'अभिज्ञानशाकुन्तल' आदि के 'ग्रीवाभङ्गाभिरामम्' आदि सूक्ति में जो मृग आदि का गुणवर्णन है उसमें कोई 'सन्ध्यङ्ग' योजना नहीं क्योंकि इस रूपक के बीजभूत अर्थ से इसका कोई सम्बन्ध नहीं। इसी प्रकार अन्य

(५म अङ्ग : युक्ति)

संप्रधारणमर्थानां युक्तिः—

यथा—वेण्यां-'सहदेवो भीमं प्रति आर्य ! किं महाराजसन्देशोऽयमव्युत्पन्न एवार्येण गृहीतः' इत्यत प्रभृति यावद्भीमवचनम्।

'युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥' इति।

(६ठा अङ्ग—प्राप्ति)

—प्राप्तिः सुखागमः ॥ ८४ ॥

यथा तत्रैव—'मथ्नामि कौरवशतं समरे न कोपात्—' इत्यादि। 'द्रौपदी—(श्रुत्वा सहर्षम्) णाध, अस्सुदपुव्व क्खु एद वअणम्, ता पुणो पुणो भण।' [ नाथ अश्रुतपूर्वं खल्विद वचनम्, तत्पुन पुनर्भण ! ]

---

प्रसङ्गों में भी 'सन्ध्यङ्ग' और सन्ध्यङ्ग की भाँति प्रतीत होने वाले अन्य वैशिष्ट्यों का विवेक स्वयं कर लेना चाहिये (अर्थात् यह ध्यान रखना चाहिये कि 'सन्ध्यङ्ग' रूपक के वीजभूत अर्थ से ही सम्बद्ध तत्त्व है)।

**विमर्श**—'विलोभन' 'गुणाख्यान' रूप हुआ करता है। इससे प्रस्तुत कृत्य के सम्पादन की अभिलाषा स्थिर की जाया करती है। 'वेणीसंहार' के उपर्युक्त प्रसङ्ग में भीम की 'वेणीसंहार' विषयक अभिलाषा का ही स्थिरीकरण किया हुआ है। 'परिन्यास' के वाद 'विलोभन' की योजना हुआ करती है। कुछ नाट्याचार्य, जैसे कि धनिक और धनञ्जय आदि, तो इसे 'मुखसन्धि' का ही अङ्ग मानते हैं किन्तु कुछ नाट्याचार्य, जैसे कि रामचन्द्र, गुणचन्द्र आदि, ऐसे भी हैं जो इसे अन्य सन्धियों के लिये भी उपयुक्त मानते हैं।

अनुवाद—'युक्ति' कहते हैं 'अर्थसंप्रधारण' अथवा कर्त्तव्यनिश्चय को। जैसे कि, 'वेणी-संहार' के इस प्रसङ्ग अर्थात्—

'सहदेव (भीम के प्रति) आर्य ! आपने महाराज का संदेश ठीक-ठीक नहीं समझा।' आदि से लेकर भीमसेन की इस उक्ति अर्थात्—

'सहदेव ! भरी राज-सभा से द्रौपदी का केशकर्षण तुम लोगों के लिये क्योंकर लज्जा-जनक लगने लगे, अरे ! तुम लोगों को तो क्रोध में आकर शत्रुवंश के संहार करने में लज्जा लग रही होगी !'

तक जो सन्दर्भ है उसमें 'युक्ति' की ही योजना की गयी है।

**विमर्श**—'युक्ति' अथवा 'अर्थसंप्रधारण' में, गुण-दोष के विवेकपूर्वक, कार्यपर्यालोचन का अभिप्राय छिपा है। युक्ति की योजना में सन्ध्यङ्ग निर्देश के क्रम का कोई महत्त्व नहीं, क्योंकि 'विलोभन' के वाद 'युक्ति'-योजना का कोई नियम नहीं दिखायी देता। 'परिकर' के वाद भी 'युक्ति' की योजना की जा सकती है और की भी गयी है।

अनुवाद—'प्राप्ति' का अभिप्राय सुखागम है। जैसे कि 'वेणीसंहार' के ही इस प्रसङ्ग अर्थात्—

'भीम—मैं भला संग्राम में कौरवों पर क्यों क्रोध करने लगा'।

आदि के अनन्तर—

'द्रौपदी (सुनकर, प्रसन्नता के साथ) प्रियतम ! पहले कभी तुम्हारे मुँह से ऐसी

(७ म अङ्ग-समाधान)

**बीजस्यागमनं यत्तु तत्समाधानमुच्यते ।**

यथा तत्रैव—'(नेपथ्ये कलकलानन्तरम्) भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयः ! अस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥'

अत्र 'स्वस्था भवन्तु मयि जीवति—' इत्यादि बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात्समाधानम् ।

---

जाय न छुआई पड़ी ! कहो कहो फिर-फिर यही कहो । आदि में जिस संभ्रम की योजना है वह 'प्राप्ति' ही है ।

विमर्श—'प्राप्ति' का अभिप्राय केवल सुख का आगम नहीं अपितु सुखहेतु का भी आगम है जैसा कि नाट्यदर्पणकार का कथन है—

'प्राप्तं सुखसम्प्राप्तिः—सुखस्य सुखहेतोश्च सम्यगन्वेषणात्प्राप्तिः प्रापणम्'
(नाट्यदर्पणः १ म विवेक)

इसकी योजना एक बार ही हो ऐसा कोई नियम नहीं । वैचित्र्य के लिये इसकी अनेक बार भी योजना की जा सकती है ।

अनुवाद—'समाधान' वह है जिसे बीज का आगमन अथवा समीचीन रूपसे आधान कहा गया है ।

जैसे कि 'वेणीसंहार' के इस प्रसङ्ग अर्थात्—

'(नेपथ्य में डङ्का बजने के बाद) अरे ! द्रुपद, विराट, वृष्णि, अन्धक और सहदेव प्रभृति अक्षौहिणीनायको और कौरवसेनाध्यक्षो ! सुनो—

आज कौरववन में महाराज युधिष्ठिर की क्रोधाग्नि धधक रही है वही क्रोधाग्नि जिसे सत्यपालन की प्रतिज्ञा के टूटने के डर से परिश्रमपूर्वक बुझा सा दिया गया था जिसे कुलक्षय और कुलशान्ति के लिए विस्मृतिगर्भ तक में डाल दिया गया था, किन्तु द्यूत की अरणि और द्रौपदी के केशाम्बराकर्षण की हवा भला कबतक उसे शान्त रहने देती !'

आदि, में 'समाधान' की ही योजना स्पष्ट दिखायी दे रही है ।

यहाँ 'समाधान' इसीलिए है क्योंकि यहाँ 'मेरे जीते-जागते क्या कौरव स्वस्थचित्त हुए आनन्द मनायेंगे' आदि भीमवचन में उपक्षिप्त युद्धोन्मादविषयक बीज का ही समीचीन आधान किया जा रहा है ।

विमर्श—'समाधान' वस्तुतः बीज का ही पुनर्न्यास है । उपक्षिप्त बीज के समीचीन आधान का अभिप्राय इसका यही है । नाट्यदर्पणकार ने इसीलिये समाधान को 'पुनर्न्यास' कहा है—

पुनर्न्यासः समाहितिः ॥

संक्षिप्योपक्षिप्तस्य बीजस्य स्फुटतामतिपादनार्थं पुनर्न्यासः प्रतिनिर्देशविशेषः सम्यगा-समन्तात् धानं धारणं समाहितिः' (नाट्यदर्पणः १ म विवेक) ।

( ८ म अङ्ग—विधान )

**सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ८५ ॥**

यथा बालचरिते—

'उत्साहातिशयं वत्स ! तव बाल्यं च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥'

यथा वा मम प्रभावत्याम्—'नयनयुगासेचनकम्—' इत्यादि ।

( ९ म अङ्ग—परिभावना )

**कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ।**

यथा वेण्यां द्रौपदी युद्धं स्यान्न वेति संशयाना तूर्यशब्दानन्तरम् 'णाध ! किं दाणिं एसो पलअजलहरत्थणिदमन्थरखणे खणे समरदुन्दुभि ताडीअदि ।' [ नाथ ! किमिदानीमेष प्रलयजलधरस्तनितमन्थर क्षणे क्षणे समरदुन्दुभिस्ताड्यते ]

---

अनुवाद—'विधान' वह है जिसे सुख-दुःख अथवा सुख या दुःख का एकत्र या अनेकत्र उपनिपात कहा गया है। जैसे कि 'बालचरित' के इस प्रसङ्ग अर्थात्—

'राम ! क्या बताऊँ, एक ओर तुम्हारा उत्साह और दूसरी ओर तुम्हारे बाल्यभाव को देखकर, मेरा मन एक ही साथ हर्ष और विषाद से आक्रान्त हो उठा है !'

आदि में या मेरी अपनी कृति 'प्रभावती-परिणय' के 'नेत्रयुगल की संतृप्तिरूप' आदि संदर्भ में, जिस सन्ध्यङ्ग की योजना है वह 'विधान' ही है।

विमर्श—नाट्यदर्पणकार के अनुसार 'विधान' का यह स्वरूप है—

'विधानं सुखदुःखाप्तिः'—

द्वयोः सुखदुःखयोरेकत्रानेकत्र वा पात्रे प्राप्तिरेकस्य वा सुखस्य दुःखस्य वा प्राप्तिर्विधानम्। एकत्र पात्रे सुखदुःखयोः प्राप्तिर्यथा मालतीमाधवे—

'माधवः—

यद् विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् ।
तत् सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥'

इत्यनेन सानुरागमालत्यवलोकनान्माधवस्य सुखदुःखाप्तिः।' (नाट्यदर्पण १ म विवेक)

'प्राप्ति' और 'विधान' दो भिन्न-भिन्न स्वभाव के अङ्ग हैं। 'प्राप्ति' तो सुखान्वेषण अथवा सुखसाधनान्वेषण है किन्तु 'विधान' सुखसन्निधानरूप है। सुख के अन्वेषण और सन्निधान में जो भेद है वही 'प्राप्ति' और 'विधान' के परस्पर भेद का हेतु है।

अनुवाद—'परिभावना' वह है जिसे कुतूहलपूर्ण वचन का विन्यास कहा गया है। जैसे कि 'वेणीसंहार' में 'युद्ध होगा या न होगा' के संदेह में पड़ी द्रौपदी की जो यह उक्ति है—

'प्राणनाथ ! क्या बात है कि रह-रह कर, प्रलयकालीन मेघगर्जन की भाँति गंभीर और भयङ्कर समर-दुन्दुभि का नाद सुनायी पड़ रहा है।'

उसमें 'परिभावना' की ही रूपरेखा झलक रही है।

विमर्श—'परिभावना' का तात्पर्य विस्मय है—

'जिज्ञासातिशयेन किमेतदिति कौतुकानुबन्धे विस्मयः परिभावना।'

( नाट्यदर्पण : १ म विवेक )

(१० अङ्ग-उद्भेद)

बीजार्थस्य प्ररोहः स्यादुद्भेदः—

यथा तत्रैव—'द्रौपदी—अण्ण च णाह, पुणोवि तुम्हेहिं समराअदो आअच्छिअ समास्सासइदव्वा। [ अन्यच्च नाथ ! पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या ]

भीमः—ननु पाञ्चालराजतनये ! किमद्याप्यलीकाश्वासनया—

भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥

(११ अङ्ग-करण)

—करणं पुनः ॥ ८६ ॥

प्रकृतार्थसमारम्भः—

यथा तत्रैव—'देवि ! गच्छामो वयमिदानीं कुरुकुलक्षयाय' इति।

---

विस्मयाभिव्यञ्जक वचन-विन्यास द्वारा उपक्षिप्त बीजवस्तु से सम्बद्ध जिज्ञासा की ही पुष्टि की जाया करती है।

अनुवाद—'उद्भेद' का अभिप्राय बीजार्थ का प्ररोह है। जैसे कि 'वेणीसंहार' के ही इस प्रसङ्ग अर्थात्—

'द्रौपदी—नाथ! एक बात और संग्राम से लौटकर एकबार फिर मुझे सान्त्वना देना।

भीम—पाञ्चालराजकुमारी ! अब झूठी सान्त्वना क्यों ?

अब तू इस भीम को अपमान से कलंकित और म्लानमुख न देख पाओगी। अब तो कौरवों का सर्वनाश करके प्रसन्नवदन भीम तेरे सामने होगा।

आदि में जो सम्बन्ध है वह 'उद्भेद' रूप ही है।

विमर्श—'उद्भेद' का स्वरूप नाट्यदर्पण की इन पंक्तियों में स्पष्ट है—

'स्वरूपप्ररोह उद्भेदः—अङ्कुरावस्थापन्नस्य बीजस्य स्वरूपप्ररोहः। किञ्चित् फलस्य प्रधानानुकूल्यप्रदर्शनं चान्यस्योपक्षिप्तस्योद्भेदः। बीजस्योत्पादनमङ्कुररूपम्, उद्भेद पुनरङ्कुरावस्थापन्नात् भूमिभ्यस्तथान्योपक्षिप्तस्य प्राचीनावस्था इत्यर्थः मुखसन्धेरेवाङ्गम् न पुनरन्यत्वात् प्रतिमुखसन्धेः।' (नाट्यदर्पण प्रथम विवेक)

अर्थात् 'उद्भेद' तो मुखसन्धि का अंग है और 'उद्वार' प्रतिमुख सन्धि का। 'उद्भेद' बीज की अंकुरावस्था की तैयारी है और 'उद्वार' बीज का अंकुरोत्पादन है। 'उद्भेद' के बाद ही 'उद्वार' की सम्भावना है पहले नहीं। इसलिये 'उद्भेद' मुखसन्धि का अङ्ग है—और 'उद्वार' प्रतिमुख सन्धि का।

अनुवाद—'करण' का अभिप्राय प्रस्तुत विषय के समारम्भ का अभिप्राय है।

जैसे कि 'वेणीसंहार' का यह प्रसंग अर्थात्—

'भीम—देवी ! अब हम कुरुवंश के सर्वनाश के लिये चल पड़े हैं।

आदि में जो सम्बन्ध है वह करण ही है।

विमर्श—करण' अवसर के अनुकूल कार्यारम्भ है। इस अंग की योजना से भी उपक्षिप्त बीज का ही परिपोष किया जाया करता है। ऊपर के उदाहरण में भीम का युद्धोत्साहरूप बीज अभिव्यक्ति परिपुष्ट होता दिखायी दे रहा है।

( १२ अङ्ग–भेद )

—भेदः संहतभेदनम् ।

यथा तत्रैव—'अत एवाद्यप्रभृति भिन्नोऽहं भवद्भ्य ।'

केचित्तु—'भेदः प्रोत्साहना' इति वदन्ति ।

( प्रतिमुखसन्धि के १३ अङ्ग : निर्देश )

अथ प्रतिमुखाङ्गानि—

विलासः परिसर्पश्च विधुतं तापनं तथा ॥ ८७ ॥
नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ।
विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ॥ ८८ ॥
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ।

---

अनुवाद—'भेद' कहते हैं सघविघात को ।
जैसे कि 'वेणीसहार' के इस प्रसग अर्थात्—

'भीम—इसीलिये आज से मेरा और तुम लोगों का कोई सम्बन्ध नहीं ।'

आदि में जिस सन्ध्यङ्ग का विनिवेश है वह 'भेद' है ।

कुछ नाट्याचार्य 'भेद' का अभिप्राय ( सघविघात नहीं अपितु ) 'प्रोत्साहन' मानते हैं ।

विमर्श—'भेद' का एक और भी अभिप्राय है और वह है 'पात्रनिर्गम' । नाट्यदर्पणकार ने 'भेद' की यह स्वरूपमीमासा की है—

'भेदनं पात्रनिर्गम —रङ्गप्रविष्टानां पात्राणां निर्गमो रगान्निःसरणं येन तद् भेदनम् । पात्राणा यथास्व प्रयोजनवशादितश्चेतश्च गन्तुमन्यार्थोऽप्यभिप्राय उद्यमो वा रंगान्निर्गममापादयन् भेदनमुच्यते । यथा वेणीसंहारे भीमो द्रौपद्या सग्रामापायशङ्किन्या शरीरानपेचे पराक्रमे निषिद्ध प्रत्याह—

'अयि सुचत्रिये !

अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के
मग्नाना स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कवन्धे
सग्रामैकार्णवान्त पयसि विचरितुं पण्डिता पाण्डुपुत्रा ॥'

इत्येतेन हि सग्रामविचरणे पाण्डवानां पाण्डित्यख्यापनेन संग्रामावतरणाभिप्राय सहदेवस्य चात्मनश्च संघातभेदनार्थ एवोपदर्शित इति भेदोऽङ्गम् ।

अन्ये तु भेद प्रोत्साहनमाहु ।

अन्ये तु सहतानां प्रतिपक्षाणां बीजफलोत्पत्तिनिरोधकाना विश्लेपक भेदरूपमुपाय भेदन मन्वते ।' ( नाट्यदर्पण · प्रथम विवेक )

अनुवाद—'प्रतिमुख' सन्धि के ये १३ अङ्ग हैं—( १ ) विलास, ( २ ) परिसर्प, ( ३ ) विधुत, ( ४ ) तापन, ( ५ ) नर्म, ( ६ ) नर्मद्युति, ( ७ ) प्रगमन, ( ८ ) विरोध, ( ९ ) पर्युपासन, ( १० ) पुष्प, ( ११ ) वज्र, ( १२ ) उपन्यास और ( १३ ) वर्णसहार ।

विमर्श—प्रतिमुखसन्धि के इन अगों की योजना से नाटकीय इतिवृत्त में वैचित्र्य का

( १ अङ्ग—विलास )

तत्र—

समीहा रतिभोगार्था विलास इति कथ्यते ॥ ८९ ॥

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः ।

यथा शाकुन्तले—

'कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥'

---

आधान किया जाता है। यद्यपि ये अङ्ग प्रतिमुख के ही अंग हैं किन्तु अन्यत्र भी इनका उपन्यास किया जाता है।

अनुवाद—'विलास' का अभिप्राय रतिभाव ( वस्तुतः रत्यादिरूप स्थायीभावों ) के विषयभूत पदार्थों के लिए अभिलाषा है।

'रतिभोगार्था समीहा' विलास है। इसका तात्पर्य यह है—'रतिभोग' कहते हैं रति-रूप भाव के हेतुभूत 'भोग' अथवा विषय जैसे कि स्त्री और पुरुष को। 'रतिभोग' के लिये अर्थात् प्रेमिका के हृदय में प्रेमी के लिए और प्रेमी के हृदय में प्रेमिका के लिए जो समीहा अथवा अभिलाषा है वह है 'रतिभोगार्था समीहा'। 'विलास' इसी समीहा का पारिभाषिक नाम है।

जैसे कि अभिज्ञानशाकुन्तल के इस प्रसङ्ग अर्थात्—

'दुष्यन्त—मेरे लिए प्रिया शकुन्तला को पाना भले ही कठिन हो किन्तु मेरा मन उसके अनुरागचिह्नों के मनन-चिन्तन में ही लीन रहा करता है। चाहे मेरा और उसका मिलन हो या न हो मुझे इसी से सन्तोष है कि हम दोनों एक दूसरे को चाहने लगे हैं।'

में, दुष्यन्त के हृदय में शकुन्तला से मिलने की अभिलाषा का जो अभिव्यञ्जन है उसमें 'विलास' का स्वरूप स्पष्ट है।

विमर्श—'विलास' प्रतिमुखसन्धि का प्रथम अङ्ग है और प्रतिमुखसन्धि रूपकसामान्य की एक विशेष अर्थराशि हुआ करती है न कि शृङ्गारमय रूपकों की ही। इस दृष्टि से 'विलास' की 'रतिभोगार्था समीहा' ऐसा लक्षण नहीं प्रतीत होता। यहाँ यदि 'रति' पद को स्थायिभावमात्र का उपलक्षण मान लिया जाय तब 'विलास' की परिभाषा ठीक बैठ जाती है। वस्तुतः नाट्यदर्पणकार का यही मत कथन है—

'प्रतिमुखस्य प्रारम्भावसरत्वाद् विलसनीयम्, स एव सुखे रस उपस्थिस्थायी विभावानुभावव्यभिचारिभिः पोषणीयः। क्रमश्च स्थायी सुखसम्पादनमस्ता स्यात्। प्रतिमुखे विलासेन स एव विलास्यते। विलासप्रकारान्तरमन्यत्र वेतराण्यङ्गानि विलसनीयानि। वीरादिरसप्रधानेष्वपि रूपकेषु युद्धरसादिसम्पत्तिर्यो दृश्यते विलासः।' ( नाट्यदर्पण : प्रथम विवेक )

अर्थात् जैसे शृङ्गारप्रधान रूपक-प्रबन्धों में नायक और नायिका की परस्पर रतिसमीहा को 'विलास' कहा गया है वैसे ही वीर-रसप्रधान रूपक-प्रबन्धों में उत्साहविषयक समीहा भी 'विलास' ही है।

( २ अङ्ग-परिसर्प )

**इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।**

यथा शाकुन्तले—

'राजा—भवितव्यमत्र तया । तथा हि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥'

( ३ अङ्ग-विधुत )

**कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः ॥ ९० ॥**

यथा तत्रैव—'अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ।'
[ अलं व अन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन ]

केचित्तु—'विधृतं स्यादरतिः' इति वदन्ति ।

---

अनुवाद—'परिसर्प' का तात्पर्य किसी लुप्तप्राय किन्तु अभीष्ट वस्तु का अन्वेषण है ।
जैसे कि 'अभिज्ञानशाकुन्तल' के इस प्रसङ्ग अर्थात्—
'राजा—'यहाँ मेरी प्रियतमा अवश्य होगी । क्योंकि—
इस लतामण्डप के द्वार पर पीली बालू के ऊपर पड़े, आगे की ओर ऊँचे और नितम्बभार से पीछे की ओर दबे, नये-नये पद-चिह्न उसी की सूचना दे रहे हैं ।'
में, दुष्यन्त के द्वारा, अदृश्य शकुन्तला का जो अनुसधान वर्णित है वह 'परिसर्प' का ही निदर्शन है ।

विमर्श—'परिसर्प' को कतिपय नाट्याचार्य 'अनुसर्पण' कहा करते हैं। 'अनुसर्पण' का अभिप्राय नष्ट किन्तु इष्ट वस्तु की ईहा है। ( नष्टेष्टेहाऽनुसर्पणम्—पूर्वमुपलब्धस्य पुनरन्तरितस्येतिवृत्तवशादभिलषितस्यार्थस्येहाऽन्वेषणमनुसर्पणम् )।

यह 'परिसर्प' अथवा 'अनुसर्पण' इतिवृत्त का अंश अथवा अवयव नहीं। इसका सम्बन्ध चरितचित्रण से है। मुख्य-रूपक-चरित के हृदय के भाव का इसके साथ सम्बन्ध है। किन्तु जैसा कि मुख्य रूपक-चरित का चित्रण ही इतिवृत्त के वैचित्र्य का नियामक होता है, 'विलास' और 'परिसर्प' को इतिवृत्तरूप रूपकार्थ का अंग बताया गया है। नष्टवस्तु का अन्वेषण किसी भी रसभाव से सम्बद्ध रूपक-प्रबन्ध में अपेक्षित हैं । 'अभिज्ञानशाकुन्तल' का उदाहरण एक सकेतमात्र है।

अनुवाद—'विधुत' का अभिप्राय किसी पूर्वकृत अनुनय या सान्त्ववचन के परित्याग का अभिप्राय है ।

जैसे कि 'अभिज्ञानशाकुन्तल' के ही इस प्रसङ्ग अर्थात्—

'शकुन्तला—मेरे लिये तुम लोग अन्तःपुर के विरह में व्याकुल इस राजर्षि को न रोको ।'
आदि में, दुष्यन्त को रोक रखने के लिये, शकुन्तला के पूर्वकृत अनुनय के परित्याग का जो वर्णन है उसमें 'विधुत' की योजना है ।

कुछ नाट्याचार्य इसे 'विधृत' कहते हैं और 'विधृत' का अभिप्राय 'अरति' ( अरुचि ) बताते हैं ।

विमर्श—नाट्याचार्य भरतमुनि ने 'विधुत' के बदले 'विधूत' को सन्ध्यङ्ग माना है—

